श्री

लाडिलीचंद्र

निर्म्मितो

# लाडिलीचंद्रप्रकाश:

इसस्तोत्रके विचारपूर्व्वक पाठकरने हीसे मनुष्यधर्म्म अर्थकाममोक्षकोसहजमें प्राप्तकर सकता है।

---

जिसको

श्रीमोहिनीलाल गुप्त

ने केवल परोपकारके निमित्त शुद्धकरके

अपने परममित्र

श्रीमहादेवलाल साहु

की आज्ञानुसार

श्रीप्यारीमोहन सूर

के प्रबंध से।

---

कलकत्ता

डफष्ट्रीट भुवन नंबर १४ कौननाम यंत्र में
मुद्रित कराकर प्रकाशित किया
संवत १९४१।

मूल्यप्रति पुस्तक —)।

ओ३म्

श्री

लाडिलीचंद्र

निर्मितो

# लाडिलीचंद्र प्रकाशो

लिख्यते ।

## तत्रादौ समालोचना

श्रीमता लाडिलीचंद्रेण धीमता भुवनस्थाननिवा-
(सि)ना निर्मितमदः स्तोत्रं लाडिलीचंद्रप्रकाशं मोहमयी-
(नि)वासिना मयाऽजितशर्मणाऽवलोकितम् ॥ तावदिदं
पुस्तकमभिनवरसार्द्रमतिप्रशंसनीयं च । अहं देववाण्या-
(म)नेकानि स्तोत्रपुस्तकानि पश्यामि परंतु यः सर्व्वधर्म्म-
सिद्धांतोपदेश एतल्लघुस्तोत्रे प्रतिपादितः सोन्यत्र दुष्प्राप्य
एवेति ॥ अनेनोपदेशेन मुमुक्षुरल्पश्रमेणैव ब्रह्मानंदं
प्राप्तुमर्हति । रचनाप्यस्यातिश्लाघ्या वैदिकलौकिकशब्दा-
भिर्भूषिता शांतभक्तिरसावर्त्ता हर्षज्ञानाभ्यां समन्विता
च परमानंददायिनी ॥ तथाप्युक्तम् ॥ तया कवितया
किम्वा किम्वा वनितया तया । पदविन्यासमात्रेण न

मनोह्रियते यया ॥ १ ॥ भाषाप्रणाली तावदस्य श्लाघनीया न सरला निरक्षरबोधगम्या नापि कठिनशब्दजालपूरिता यस्यां विद्वांसोऽपि मुह्यंति ॥ वस्तुतोमनोरंजनया कवितयाऽनया कवेरनल्पपरिश्रमोदृढ़ा भक्तिः परोपकारस्य प्रतीयते । अतोहं ब्रवीमि परमेश्वरानुग्रहेण कवेर्मनः शिवसंकल्पमस्तु ॥

इति समालोचना ॥

---

अथ विज्ञप्तिः । नमोऽद्वितीयाय परमेश्वराय ।

यशोदं कामदं विष्णुं वंदे वागिंद्रमच्युतम् । गोतीतमणवातीतं सत्यं ज्ञानं महेश्वरम् ॥१॥ निरजंनं निराभासं निराधारं निराश्रयम् । निराकारं निर्विकल्पं सम्भजाम्यपराजितम् ॥ २ ॥ ईडे नारायणं देवं जन्ममृत्युजरातिगम् । ब्रह्मण्यं माधवं जिष्णुं सर्वलोकैकपालकम् ॥ ३ ॥ पितरं लाडिलीचंद्रं रेवानंद महं गुरुम् । विद्यावतीं मातरं देवीं प्रणमामि मुहुर्मुहुः ॥ ४ ॥ ओ३मस्य श्रीमल्लाडिलीचंद्रनिर्मितस्य लाडिलीचंद्रप्रकाशस्याहं लाडिलीचंद्रसूनुर्विद्याम्युदरोद्भवः शरच्चन्द्रोमथुरामंडले कलिंदनंदिनीकूले सम्वसन् विज्ञप्तिं कुर्वे । मज्जन्मनः पूर्वमेव भ्रातुर्माधवचंद्रस्य मृत्यववसाने शोकार्त्तांमातरं विद्यावतीं पिता लाडिलीचंद्रेणेदं स्तोत्रं तस्यादुःखोपशांतये प्रगटितमिति वेदितव्यम् ॥ अस्मिंस्तवे शशिनेत्रभूसम्मितश्लोकसमन्विते शिखरिण्यनुष्टुबिंद्रवज्रोपेंद्रवज्रातोटकभुजंग-

प्रयात मणिमध्यायार्दूलविक्रीड़िताख्येतानि छंदांसि संति। आदौ कविः स्वपत्न्याः सुतमृत्युशोकजनितं विलापमाकर्ण्य तस्यादुःखोपशमनाय तान्मोहापहं सर्वसिद्धांतमकल्मषं सत्यमुपदेशं कृतवान्। किंच जीवस्तु कदापि केनापि प्रकारेण नैव क्षयते किंतु देहे पंचत्वं गते सति परं शरीरं प्राप्नोति। अतोऽत्र त्वं शोचितुं नैवार्हसि॥ तच्च युक्तमेव॥ उपदेशो हि निजप्रियवर्ग एव कार्य्यः तथाच बामा परमप्रियैव विशेषतः पतिः स्त्रियास्तत्वदाता गुरुरित्याह मनुः॥ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणोगुरुः। पतिरेकोगुरुः स्त्रीणां सर्वत्राभ्या गतोगुरुः॥१॥ अतस्तदुपदेशोपकर्णं भर्त्तेयैव शर्य्यवत्स्थितम्॥ अतःपरंतस्याः प्रश्नस्योत्तरे स ब्रह्मणोऽद्वितीयस्य स्तुतिप्रार्थनामिषेण निरुपद्रवस्य परमेश्वरस्य सद्गुणान् तस्यैवेच्छायाः प्रबलतां न्यायाधिकारं च जगतो बहूनि दुःखान्यब्रवीत्। ललितयाऽनया स्तुत्या प्रार्थनया संसारदुःखनिवृत्त्यर्थया परमानंदप्राप्तिपरया च मनः सततं शुध्यति नात्र कोपि संशयः परंतु विचार एव मुख्योस्ति॥ पुनर्विद्याम्नी पृच्छति हे यामुनेय मया परमेश्वरस्य स्तुतिप्रार्थना तु श्रुता परंत्विदानीमहं किं करोमीति त्वं ब्रूहि मांच त्वां प्रपन्नां प्रसंशाधि। ततो लाडिलीचंद्रः सातिनंदः कैवल्यदायकम्परे चापरे लोके कल्याणकारकमुपदेशमकरोत्। किंच हे विद्याम्नि संसारेऽस्मिन् सर्वे पुत्रपौत्रादयः स्वस्वप्रयोजनाय हितं कुर्वंति। अयम्मनुष्यस्तु मोहान्धकारार्णवे निमग्नो बुद्धिभ्रष्टः स्वकुटुंबपालनार्थं तृष्णया कालं कालं कष्टं प्राप्नोति। परमात्मानमद्वितीय-

मेकं केवलं विशिष्टं विष्णुं च सत्याचारं विहाय भूतयोनिषु मिथ्याचारे चाधर्म्मे प्रपद्यते। पुनर्यथा यमुना माता स्वर्गं-गता माधवचंद्रस्य सुतः परलोकं प्राप्तस्तथैव सर्वेषां गमनं भविष्यति। तस्मादेव शीघ्रं निर्विलम्बं यथा स्यात्तथा शम्भुर्भगवान् भजनीयः। अतएव हे हरिजे त्वमपि दुःखं लोभम्मोहं च दुष्कृतं त्यक्त्वा आत्मवत् सर्वभूतेषु पश्यन् स त्य माचरन् दुःखं च सुखं समं ज्ञात्वा विष्णुं त्रिलोकैकनाथं भज। अनेनैव त्वं मुक्तिं परियास्यसि॥ शरच्चंद्रो द्वितीयपुत्त्रस्तव गर्भे जन्म धारयित्वा त्वां रंजयत्वित्याशीर्वादः। स एव लाडिली-चंद्रात्मजः शरच्चंद्रोहमिति ज्ञेयः॥ स्थले चास्मिन्मुमुक्षु मनोहर्षज्ञानाभ्याम सुतम्भवति॥ नूनमयमुपदेशः सर्वेषां बालानां यौवनसम्पन्नानां वृद्धानां च नारीणां हितोस्ति। कदापि विष्णुमंतरा न पूज्या न कदापि सत्याचरणम्परि-त्यज्य मिथ्याचारे प्रवृत्तिः कर्त्तव्या। सत्येनैव ब्रह्मचर्य्य-गृहस्थाद्याश्रमाणां सर्वाणि कर्म्माणि सिध्यंति मिथ्या-चारे तु दुःखमेव प्राप्नोति॥ कविनास्मिन्नतिसूक्ष्मे पुस्तके सर्वधर्म्मसिद्धांतः प्रतिपादितः॥ योऽस्य स्तोत्रस्य स्तुतौ प्रार्थनायां निरूपिताञ्छब्दान् परमेश्वरवाचकान् सार्थान् हितोपदेशं विचारपूर्वकं पठेत्सत्यधर्म्मं चाचरेत्स निश्चयेनेह भूत्व नित्यं सुखी भवेदित्यतिविस्तरेणालम्॥ गुहायां निहितं ब्रह्म सर्वेषां मूलकारणम्। यदव्ययं नमस्तस्मै ब्रह्मणोऽनंत मूर्तये॥ १॥ शम्भोस्त्वजस्तकस्तारो महावीर्य्यः प्रजापतिः। विक्रमी सिद्धसंकल्पः सर्वदर्शी प्रभुः सुहृत्॥ २॥ इति विज्ञप्तिः॥

अथ लाडिलीचंद्रप्रकाशस्य प्रारंभः

नमोब्रह्मणे ।

यशोदं वागीशं परमसुखदं सर्वनिहितं । गदलंतं सत्यं विविधवरदं खंगणपतिम् ॥ प्रपद्ये गोतीतं भवभयहरं शेषशयनं । यविश्वम्मालीनं कलितशुभयज्ञं वसुपतिम् ॥१॥ विशिष्टः परर्द्धिः पुराणश्रवायुः समर्थोमहेंद्रः पृथुर्वीरबाहुः । महादेव एकोमहाहौनिवर्त्ती भवत्वर्थ्य ईशः प्रसिद्धोहिशन्नः ॥ २ ॥ अच्युतं सच्चिदानंदं गोलक्ष्यं करुणाकरम् ॥ दण्डिनं शम्भवन्नौमि जगन्नाथम्पुरोहितम् ॥३ ॥ आयोध्यिर्दक्षिणम्पुण्यं यासुनेयोव्ययं हरम् ॥ रात्वायनो महालिंगम्भूगर्भ्भं शङ्करानुजः ॥४ ॥ भुवनस्थान सम्वासोदस्युघ्नम्मदनाग्रजः ॥ प्रणम्य लाडिलीचंद्रोविदान्नीपतिरीश्वरम् ॥ ५ ॥ नवम्याद्दषिनेत्रेद्वे माधवे चाऽसिते दले ॥ धरात्मजे महापुण्ये धारयन्नचलम्ब्रतम् ॥ ६ ॥ वृंदारण्येतिलावण्ये सम्वसन् यमुनातटे ॥ ब्रह्मणोवर्चसं पुण्यं वरेण्यं रोपयन् हृदि ॥ ७ ॥ लाडिलीचंद्रप्रकाशं श्रुतिपेयम्मनोरमम् ॥ चंद्रसूर्य्यश्लोकयुक्तं सम्वदामि भयापहम् ॥ ८ ॥ निर्मला पूर्णविद्यानां क्रिया ज्ञेया महीयसाम् ॥ तुच्छबुद्धिकृतं ज्ञात्वा क्षमध्वं ज्ञानदर्शिनः ॥ ९ ॥ वंदे धन्य बलं शुक्रं पुरुहूतम्भगम्मृडम् । कूर्म्मं शुद्धं गदलंतं सम्विदानं जनार्दनम् ॥ १० ॥ विदान्नुवाच ॥ सर्वम्माधव संविहाय सहसा त्वं गतोसि ध्रुवं । हाहा पुत्त्र करोमि किं शशिमुखं पश्यामि कस्य प्रिय ॥ माताहं तव पश्य मां पिव पयोमा गच्छमालिन् बहिः । अंकं केन करोमि शोभित निद्र प्राणो पिनो

गच्छति ॥११॥ वस्त्रैस्ते सुत कोभविष्यति मुदा हाहा समाच्छादितः। शालीकः कटकांगदादिभिरये गावः करिष्यंति किम् ॥ आयासेन हृदि त्वमेव ललनापालिव्रतैर्दीरुणैः त्यक्त्वा मातरमद्य मां गृहविभो हाहा कथं गच्छसि ॥ १२ ॥ हा कं वदिष्यामि शृणुष्व भर्त्त नैतावलम्ब प्रियमाधवेति ॥ श्रीलाडिलीचंद्र मृतस्तु पुत्त्रो जाने न कर्त्तव्यमहं किमस्ति ॥ १३ ॥ कुरुष्वात्येव शीघ्रं त्वं यत्किञ्चित्सं करिष्यसि ॥ यदाहन्नोभविष्यामि तदात्वं किं करिष्यसि ॥ १४ ॥ लाडिलीचंद्रउवाच ॥ शोकस्तुनैवकर्त्तव्यश्चारुशीलेकदाचन ॥ शोकेन जायते मूर्च्छा कासः श्वासस्तृषा ज्वरः ॥ १५ ॥ भ्रमः क्लमोऽरुचिर्दाहो मोहस्तंद्रा वरानने ॥ पीड़ा जृम्भाऽरतिः शोषः प्रलापोजडता तथा ॥ १६ ॥ शोकोनाशयते वीर्यं बुद्धिं हृष्टिं सुखम्बलम् ॥ देहे करोति दौर्बल्यं शरीरं दहते भृशम् ॥१७॥ संतोष एव कर्त्तव्यस्तस्य वै मधुरं फलम् ॥ भवेद्यत्र प्रिये पुष्पम्भवेत्तत्रैव कंटकः ॥१८॥ सत्यब्रह्म जगन्मिथ्या जगत् सत्यं च दृश्यते ॥ यथा रज्जौ भ्रमोऽहेर्हि तथैव स्वप्नवज्जगत् ॥१९॥ न कोपि कस्यचित्पुत्रः कोपि नो कस्यचित्पिता ॥ न कापि कस्यचिन्माता कोपि नो कस्यचिद्रिपुः ॥ २० ॥ न कोपि कस्यचिन्मित्रः कोपि नो कस्यचिद्धितः ॥ न कोपि कस्यचिद्भ्राता ब्रह्म सर्वमिदं खलु ॥ २१ ॥ अव्यक्तादिजगत्सर्वं व्यक्तमध्यमिदं शिवे ॥ अव्यक्तनिधनं विद्धि शोच्योलं तत्र वल्लभे ॥ २२ ॥ कदाप्युपायैः सहस्रैरभव्यं नो भविष्यति ॥ तद्भविष्यति यद्भव्यं दैवोशक्योवरोधितुम् ॥ २३॥ गतासुन् न मुह्यंति अशोच्ये नागतासुना । सुधियो-

मानवाबाले सर्वे पीनपयोधरे ॥ २४ ॥ देहः संयाति पंचत्वं परं जीवः कलेवरम् ॥ कीर्तितोमृत्युरेवायम् वियोगोदेह-जीवयोः ॥ २५ ॥ विदाम्नि जन्मसंयोगः कल्पितं देह-जीवयोः ॥ वियोगः कीर्तितोमृत्युः शोच्योलं तत्र पण्डितैः ॥ २६ ॥ अविनाशी शिवे व्यक्तोनित्योऽछेद्यः सनातनः ॥ अशोष्योजोचुरतोचिंत्यः स्थाणुः सर्वगतोचलः ॥ २७ ॥ अक्लेद्योदाह्यश्च देही हते देहे न हन्यते ॥ गीतायां वासु-देवेन वचः सत्यं तु कीर्तितम् ॥ २८ ॥ देहांतवानयम्प्रोक्तो देह्यनाशी महोदये ॥ अतोत्र शोचितुं नैव प्रियेऽर्हसिकदा-चन ॥ २९ ॥ विदाम्नरवाच ॥ आयोध्ये श्रोतुमिच्छामि तत्त्वं कर्म्म मुमुक्षुणाम् ॥ जीवेन किं च कर्त्तव्यं येन मुक्ति-मवाप्नुयात् ॥ ३० ॥ लाडिलीचंद्र उवाच ॥ मुमुक्षवस्तु जानंति लाभालाभौ समौ मुदा ॥ फलं हि कर्म्मजं त्यक्त्वा स्थितप्रज्ञामहाशयाः ॥ ३१ ॥ मोहाब्धिं संतरत्याशु तेषां बुद्धिः प्रतिष्ठिता ॥ कामान्मनोगतान् सर्वान् ब्रह्मानंदा जहाति वै ॥ ३२ ॥ नैवोद्विग्नमनाः श्यामे भवेद्दुःखे बुधः क्वचित् ॥ वीतरागभयद्वेषः सुखेऽस्ति विगतस्पृहः ॥ ३३ ॥ निग्रहीत्वेंद्रियार्थेभ्य इंद्रियाणि सदा मुदा ॥ हरिजे ब्रह्म-विज्ञ्त्वा पदं संयात्यनामयम् ॥ ३४ ॥ मुग्धे ब्राह्मी स्थिति-रैया प्राप्ययां न विमुह्यति। यस्या मंतावसानेऽपि स्थित्वा मुक्तिं समृच्छति ॥ ३५ ॥ कर्त्तव्यं निष्फलंकर्म्म प्रीत्याजिज्ञा-सुना सदा । ज्ञेयं सर्वमिदं ब्रह्मशावकाच्चिजगन्महत् ॥ ३६ ॥ अनेन ब्रह्मनिर्वाणं जीवोयाति न संशयः ॥ अन्यः पंथा भवेनास्ति मोक्षाय प्रोक्तमादिभिः ॥ ३७ ॥ स्तुवंतोमानवा

विष्णुं सदैव प्राप्नुयुः शुभम् ॥ तेषांदुःखानि नश्यंतेजायंते
ष्टसम्पदः ॥ ३८ ॥ तं जपन्नर्च्चयन् ध्यायन् जंतुर्दुःखातिगो
भवेत् ॥ गोपालमच्युतं देवं योऽनंतोदुर्लभोहरिः ॥३९॥ विदा-
न्नुवाच ॥ कयारीत्याच कर्त्तव्यागोविंदस्यस्तुतिः शुभा ॥
यया सुखमहद्दंस्याद्दुःखं वैनश्यतेध्रुवम् ॥ ४० ॥ लाडिली-
चंद्र उवाच ॥ ययामुक्तिमवाप्नोति सर्व्वदामिहरिस्तुतिम् ॥
यातनोतिसुखं बाले तां शृणुष्वमनोरमे ॥ ४१ ॥ सदोत्थाय
मनुष्योत शुचिस्तन्नतमानसः ॥ विष्णुदेवं नमस्यंश्चपठे-
द्भक्त्या हरिस्तवम् ॥ ४२ ॥ क्रियादक्षोऽध्यक्षोनिधि पतिर-
धीशः प्रियतमः । प्रतुंजेदीशानोधमपतितमग्निः खलु
सदा ॥ बकुस्वासेकोहम्प्रणवमुखि यो कामयदये । सह-
स्राक्षोकायः सुरपतिरहिः सत्यनिलयः ॥ ४३ ॥ देवः
स्वयम्भूर्वलदस्त्वमेव त्वमेवधातामघवापितासि ॥ मित्रो-
गरिष्ठोभगवानकायः शुद्धोवलिष्ठो जय लाडिलीश ॥ ४४ ॥
राजं तमर्थ्यं सुधमंसमुद्रं तार्क्ष्यं कुवेरं निपुणम्पवित्रम् ॥
सत्यम्भुवेहं मरुणावतारं वुभ्रं र सुदक्षं जय लाडिलीश ॥
४५ ॥ चक्रीषमक्षं वृषभं निदानं शेषं सुपर्णममतिं सखा-
यम् ॥ गोपामनंतंजनितारमिध्मं शांतं सुपोषं जय लाडि-
लीश ॥ ४६ ॥ त्वामेवचक्रिन् सततम्प्रवंदे चंद्रप्रधानम्भग-
वंतमुग्रम् ॥ आदित्य वर्णंशुभमर्कमिंदुं वैकुण्ठमाज्यं जय
लाडिलीश ॥ ४७ ॥ वेदांतगीतं परिवर्द्धमानं धन्यं प्रपूज्यं
पुरुषंनमामि ॥ मान्यंगणेशं सुरुचम्महांतं वंद्यं प्रवातं जय
लाडिलीश ॥ ४८ ॥ शम्भोनमस्ते पुरुहूतबंधोजिष्णो नमस्ते
भगवन्मुरारे ॥ शिपिष्णोनमस्ते भवदेवराजन् मन्योनमस्ते

जयलाडिलीश ॥ ४६ ॥ यस्मै स कस्मै हविषाविधेम प्राणः सुवर्णं प्रणवः प्रचेताः ॥ पूषानिरुद्धो सविता मनीषीविष्णुर्जवीयान् जय लाडिलीश ॥५०॥ ध्यायेयहृद्ब्रह्मप्रथमात्तमन्नं स्वर्भासमीशं परिषद्यमग्निम् ॥ भव्यम्महेशं शतनीयमुग्रं शंखं मुनीनं जय लाडिलीश ॥ ५१ ॥ यस्मिन् बसंते प्रभवंति दग्धा बामाविहीनाविहरंति येन ॥ तस्मिंश्च भक्ताबक्र-विक्रमं तं वंदेसुरूपं जय लाडिलीश ॥ ५२ ॥ त्वम्भागरुत्मान् विदध स्वमेव प्रभोमरुत्वान् विमनाः प्रचेताः ॥ होताविधाताच पितासुधर्म्मा हंसः प्रतक्वा जय लाडिलीश ॥ ५३ ॥ त्वमेवरुद्रश्चसहस्र शीर्षा विश्वप्रणेता परिभूरसिलम् ॥ भर्गोसिभर्गोमयिधेहिराष्ट्रिन् विभोविधातर्जय लाडिलीश ॥५४॥ देवस्यभर्गः सवितुर्वरेण्यम्भद्रं वयंधीमहिचोदयान्नः ॥ धियोभुवः स्वः प्रणवः प्रभुर्भूर्महत्तदेको जय लाडिलीश ॥ ५५ ॥ हेमप्रभूतिं हरिणान् सुशीलान् पुत्रान् कलत्रंद्रविणंददातु ॥ ज्ञानं कवित्वंकुशलंजवीयो नाकम्महर्षिर्जय लाडिलीश ॥ ५६ ॥ यो धर्म्मः सर्वधर्म्माणां देवोयोनिखिलात्मनाम् ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥५७॥ अयोनिजः शमः स्वांगोगोप्ता सत्यवृषप्रियः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ५८ ॥ अप्रमेयो विश्वरेतादुराधर्षः प्रजापतिः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ५९ ॥ अजितः पुष्कराक्षो यो वेधानंदी महामनाः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ६० ॥ बृहद्रूपोहरिर्वाग्मीजीवः श्रेयः सहस्रपात् ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥

६१ ॥ अनादिर्विक्रमीसूक्ष्मः सर्वगः सर्वदर्शनः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ६२ ॥ वेद्य ईज्यो महावाङ्भूतावासो महातपाः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ६३ ॥ अव्यक्तमच्चरंराष्ट्री धर्म्मगुप्परिभूरिनः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ६४ ॥ व्याप्तोवैश्वानरोवायुर्विस्तारः स्थावरोध्रुवः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ६५ ॥ अगंवक्रमाजामिर्विरजोनं तमात्मदाः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥६६॥ अंतर्य्यामी समावर्त्तश्चंद्रमारत्नधातमः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥६७॥ अमोघः सिद्धिदोनित्यो विश्वयोनिः अमोगुहः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ६८ ॥ रमंते योगिनोयस्मिन् भूतभव्यभवत्प्रभुः ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ६९ ॥ गौः सूर्य्यमाक्रमील्लोला भयाद्यस्य शशीचताम् ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ७० ॥ यो देवः सर्वभूतेषु ज्ञानरूपेण तिष्ठति ॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै नमोनमः ॥ ७१ ॥ त्वमर्कस्त्वमिंदुस्त्वमिंद्रस्त्वमग्निः । नमस्ते नमस्ते नमस्ते नमस्ते ॥ त्वमोजस्त्वमिध्म स्त्वमर्थ्य स्त्वमघ्नः । नमस्ते नमस्ते नमस्ते नमस्ते ॥ ७२ ॥ त्वमात्मा त्वमीशस्त्वमेकस्त्वमापः । नमस्ते नमस्ते नमस्ते नमस्ते ॥ त्वमाज्यं त्वमार्य्यस्त्वमध्वात्वमुग्रः । नमस्ते नमस्ते नमस्ते नमस्ते ॥ ७३ ॥ यः प्राज्ञः करुणोदधिः पशुपतीशामो सुरारीरविः । गंधर्वः सदसस्पतिः परिदृढो वाचस्पतिर्मेधिरः ॥ आयुर्दाविमनाः प्रभासपुरुषोभद्रः किरीटी वसुः ।

गोविंदोहरि माधवोभवतुमे नित्यम्वरानंददः ॥ ७४ ॥ विष्टम्भोजनितारथः शिवतमोनारायणः सत्पतिः । द्यौर्नित्योमघवाजरोवनिपतिः को जातवेदाद्दहत् ॥ भूतानाम्पतिरीश्वरोचुग्रततपा यः सम्बिदानोंगिराः । गोविंदो हरिमाधवो भवतुमे नित्यम्वरानंददः ॥ ७५ ॥ दारिद्र्यम्परिदुःखमूल कुपितंनिर्मूलयन्मापतिः । सर्वात्मारजसावृतोव्यधिपतिः संदर्शनीयोहृदि ॥ विश्वायुः प्रतिमास्वरः शुभतरो भक्ताभिरामो मनुः । गोविंदोहरिमाधवो भवतु मे नित्यम्वरानंददः ॥ ७६ ॥ विश्वम्भाडजितोमरः प्रियकरोरेवानजः षोडशी । आदित्योवरुणोद्दतिः सुरगुरु राजा तनूकृच्छुचिः ॥ राष्ट्रीध्मोधनदः क्षत्रविपतिः सोमः स धातासहः । गोविंदोहरिमाधवो भवतुमे नित्यम्वरानंददः ॥ ७७ ॥ जयदेवसुरेश गणेशकवे जयभद्रगुरोभगवन्वकर ॥ जय शांतसनातनमाधरवे जय नाथ हरे जय विश्वधर ॥ ७८ ॥ हे शिवविद्यारण्यविभो माधवराजनु श्रवसो ॥ हातवदासोहम्विपदि त्वंकुरु कोपम्मैवमयि ॥ ७९ ॥ सम्भवशुक्रंधेहिमयि चानकवित्वे सत्यमिति ॥ हातवदासोहम्विपदि त्वं कुरु कोपम्मैवमयि ॥ ८० ॥ शक्रसुशीलं देहिवलं हेम्हड कीर्त्तिम्मुक्तिमलम् ॥ हातवदासोहम्विपदि त्वं कुरु कोपम्मैवमयि ॥ ८१ ॥ त्वं भवशन्नश्चंद्ररवे रामदुवस्वन्नीशकवे ॥ हातवदासोहम्विपदि त्वं कुरु कोपम्मैव मयि ॥ ८२ ॥ अनेजन्निश्रावी सकलपरिधिः सोम वृषभः । वृषाह्नी विष्टम्भो वसुविदमरः पार्थिव सखा ॥ मरुत्वानादित्यः परमकुशलोशह्ममरसम् । महावीरः स्वामीहृदय-

पथगामी भवतुमे ॥ ८३ ॥ अणीयान् विश्वाराङ्गुवनपति-
रापोभयमजं। निवृत्तात्मा ज्योतिर्विधि पतिरुदीर्णः शिव-
तरः॥ सवोविश्वामित्रो व्रतपतिरचक्षुः प्रियतमः। महा-
वीरः स्वामीहृदयपथगामी भवतुमे ॥ ८४ ॥ विवस्वन् हा
ब्रह्मन् पुरुषवक्तमानो विगलितः। महादीनो भूत्वातवच
शरणं सम्परिगतः॥ अतस्त्वम्मुक्तात्मन् प्रहरममदुःखं परि-
दृढम्। महावीरः स्वामीहृदयपथगामी भवतुमे ॥ ८५ ॥
विरामो वाञ्छाकिरिपु विदमनः शंकरगुरुः। सदायोगी
जिष्णुर्मनुरतिवरः श्रेष्ठधनदः॥ पितामाता बंधुः सुहृ-
दति सुशीलोहि सुखदः। महावीरः स्वामीहृदयपथगामी
भवतुमे ॥ ८६ ॥ शिवोवक्तारम्भामवतुपुरुजातः स सुभगः।
यतोजाताः सर्वे विबुधः विभवोमानरहितः॥ भुवोभ्राजः
साक्षीसुगुणगणयुक्तः प्रियतरः। महावीरः स्वामीहृदय-
पथगामी भवतुमे ॥ ८७ ॥ विनात्वामानंदं न परम-
वलोकेप्रियकरम्। व्यवस्थानः स्वामीमखपतिर पाणि-
हितमः॥ समः शास्ताशांतो नृपतिपतिरुग्रोनिशिदिवा।
महावीरः स्वामीहृदयपथगामी भवतुमे ॥ ८८ ॥ वभ्राम
दासो विपिने प्रयत्ना द्विधूयमानः कलिनाश्रमेण॥ प्राप्तं न
किंचित्फलमेव मह्यं हाहाक्वगच्छामिवरप्रयत्न ॥ ८९ ॥
क्षम्यतामपरं स्वाध्य न करोमितवेदृशम्॥ पाहिपाहि प्रभो
राजन् पतितं दुःखसागरे ॥ ९० ॥ माकुरुष्वगयस्मान
निष्फलं जीवनम्मम॥ बुद्धिभ्रष्टेन संत्यक्तो नतत्र क्रोद्धु-
मर्हसि॥ ९१ ॥ अचुरतस्यमहातापमये नाथदया निधे॥
हाहा दुनोमिशोकाग्नौ रक्षमामयिगोपते॥ ९२ ॥ स्वयम्भू

भद्रविघ्नानि दुरितानिपरासुव ॥ हिरण्यगर्भनिश्वाविन् यद्भद्रं तन्न आसुव । ९३ ॥ मर्त्यादिभ्योधराधारो भूता-देर्हव्यवाहनः ॥ शोकादिसर्वदुःखेभ्यो भयत्रातावरत्वतु ॥ ९४ ॥ सर्वदावेदिनोधाता त्वष्टास्रष्टामयोभवः ॥ शतानंदोजगन्नाथ स्सविता वेदजिह्वकः ॥ ९५ ॥ विदान्नुरुवाच ॥ अहं किं करोमि प्रियब्रूहिभर्त्तः श्रुता लाडिलीचंद्र कांतस्तुतिस्तु ॥ विदान्नीसुष्टच्छामिच त्वा अपन्ना प्रसंशाधिमांयासुनेयार्यपुत्र ॥ ९६ ॥ लाडिलीचंद्र उवाच ॥ विदाब्नि श्रीनाथं सुघन जघनेतन्मधुरिपुं । वरारोहेविष्णुं त्वमपि भजयस्यं स्तुतिरियम् ॥ प्रसन्नेप्रख्यातः सकलभुवने यः सुयशसा । शिवे कम्बुग्रीवे कमलवदने शस्मितनुते ॥ ९७ ॥ गतामाता नाकं विगत भवमोहातुयमुना । सुतो यातो मृत्युं तवच ममवैमाधव इह ॥ तथा भव्यं वालेगमन-मिति बोद्धव्यमनघे । ततो देवः शम्भुः सपदिभजनीयः शशिमुखि ॥ ९८ ॥ संसारसागरेपोतं प्रणवः परिवर्त्तते ॥ तद्विहाय महामूढाः पद्यंते भूतयोनिषु ॥ ९९ ॥ न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः । तदेकः केवलः स्रष्टा विशिष्टः पुरुषोत्तममः ॥ १०० ॥ तीर्थानि देवताकाचि-न्मधुदसूदन मंतरा ॥ न पूज्यानापि मंतव्या विष्णुमेवाभि-पूजयेत् ॥ १०१ ॥ सत्यान्नास्ति परोधर्मः सत्यान्नास्तिपरः शिवः ॥ सत्यान्नास्तिपरो यज्ञः सत्यान्मागामनोरमे ॥ १०२ ॥ सदेव धर्मो मूलं हि सदेव प्राणदं रमे ॥ भयत्राता सदेवास्ति तस्मात्त्वं सत्यमाचर ॥ १०३ ॥ रौरवम्परिगच्छंति दुःखमात्महनो जनाः ॥ चंद्रकांतेऽतएव त्वं ललने सत्यमा-

चर ॥ १०४ ॥ कामं क्रोधम्परित्यज्य लोभम्मोहंच दुष्कृतम् ॥ सुखदुःखे समेज्ञात्वा हरिजे सत्यमाचर ॥ १०५ ॥ विमुक्तात्मा महाधीराज्ञानिनस्समदर्शिनिः ॥ विद्वांस स्तन्वि गच्छंति सत्येनैव परांगतिम् ॥ १०६ ॥ स्वकामाय हितं सर्वे प्रकुर्वंति वरानने ॥ ज्ञानमद्यं प्रपीयत्वं केवलं सत्यमाचर ॥ १०७ ॥ के किंवदंति के किंचित्सत्यं सत्यं वदाम्यहम् ॥ सत्येन ब्रह्मनिर्वाणं प्राप्नुवंति मनीषिणः ॥ १०८ ॥ संसारेस्मिन्महादुष्टा हाहा तृष्णा नमुंचति ॥ अतः सर्वेजनादुःखं प्राप्नुवंति मुहुर्मुहुः ॥ १०९ ॥ आत्मवत्सर्वभूतेषु पश्यनित्यं सुलोचने ॥ धर्मोयं सर्वतः सिद्धः सिद्धानाम्परमोमतः ॥ ११० ॥ चराचरात्मानमवश्यमग्र्यं विद्धान्वि विष्णुंहि जपामिनित्यम् ॥ तमेव पूज्यं हृदिरोपयेशं सुखंच मुक्तिम्परियास्यसित्वम् ॥ १११ ॥ विद्द्युरुवाच ॥ धन्योसि प्रिय लाडिली कुसुदमेस्तुत्याहरेः पुण्यया । संतापोमनसस्तुशांतिमगमज् ज्ञानोपदेशेनच ॥ विद्याभूषणशालिनं सुविशुधं शोकापहं दैवतं । ब्रह्मण्यं शरणंति शिवं व्रतपतिं वंदेकृतज्ञं हरिम् ॥ ११२ ॥ सतम्प्रमाणं गुरुमप्रमेयं सिद्धम्महेंद्रं धरणीधरंच ॥ जगन्निदानं सुखदं सुरेशं नमामि विष्णुम्प्रभुमादिदेवम् ॥ ११३ ॥ लाडिलीचंद्र उवाच ॥ बालेशरच्चंद्र सुतोद्वितीयो भूत्वैवशम्भोः सदनुग्रहेण ॥ शीघ्रं हि संरंजयतु प्रियेत्वां वाचा प्रसन्नाभवमे सुशीले ॥ ११४ ॥ स्वर्गते लाडिलीचंद्रे भक्तिभूषणशालिनि ॥ लाडिलीचंद्र प्रकाशो ददातु स्मरणं सदा ॥ ११५ ॥ विघ्नहर्ते जगत्कर्ते सदानंदाय शम्भवे ॥ मोहनाय वरेण्याय

भद्रकाल्यै नमोनमः ॥ ११६ ॥ देवानामादि देवाय जगत्पालाय भूभृत ॥ ब्रह्मणे विष्णवेकस्मै सुदत्ताय नमोनमः ॥ ११७ ॥ श्रियः पतिम्प्रपद्येहं सत्यं सोमं सनातनम् ॥ आश्चर्य्यमद्भुतम्मित्रं भूमिदेवम्महेश्वरम् ॥ ११८ ॥ निर्गुणं सगुणं नित्यं स्वष्टतम्पर्य्यवस्थितम् ॥ सर्वत्तं गोहितं शुद्धं योगीशं सर्वकामदम् ॥ ११९ ॥ यो नित्यम्बिजपेदिदं शुभकरं श्रीलाडिलीनिर्मितं । हेमाङ्गः परमेश्वरः प्रकुरुते तस्याखिलम्मङ्गलम् ॥ वर्चोदाः पतिरात्मदाः शिवतरो विष्णुः पुरंधिः शशी । विश्वाद्यः सुरुचस्तुशो भयहरः शन्नोभवत्वर्य्यमा ॥ १२० ॥ लाडिलीचंद्र प्रकाशं निर्ममे लाडिलीबुधः ॥ जातवेदाः कविः शुंभुः शङ्करः शंकरोतुनः ॥ १२१ ॥

इति लाडिलीचंद्र प्रकाशः ॥

---

अथ समीक्षा ।

भुवनस्थान निवासिना श्रीमता लाडिलीचंद्रेण निर्म्मितंलाडिलीचंद्रप्रकाशाख्यं स्तोत्रम्मया पर्य्यवलोचितम् ॥ पुस्तकं तावदिदमपूर्वरस सरसमेका द्वितीयेश्वरोपासकानां सगुणावलम्बिनामपि हृदयं रमणीयम् ॥ रचनाप्यस्याति श्लाघ्यावैदिक शब्दमिश्रिता कुत्रचिल्लौकिक पदपल्लविताच । एते नैवोभयानंददायिनी ॥ कविनास्मिन्

ग्रंथेमुमुक्षुनां हितार्थाय पुत्र मृत्यु शोकानल ज्वलंत्याः स्वभार्य्यायाः शोकनिवारणार्थाय तां च ज्ञानदानेच्छया सर्व सिद्धांतोत्युत्तमः सत्यधर्म्मः प्रतिपादितः । तस्माल्लोकेच वेदेच प्रथितः पुरुषोत्तमः । भवतुतरां नितरां सानुकम्प इति वदतिकुरुक्षेत्रनिवासी गोपीनाथ शर्म्मा ॥ इति समीक्षा ॥

इति श्रीलाडिलीचंद्रनिर्मितो

लाडिलीचंद्रप्रकाशः

सम्पूर्णः

शुभः ।

